**[Published under the Esteemed Patronage of His Holiness Sri Kanchi Kamakoti Peethadhipathi Jagath Guru Sri Sankaracharya Swamigal Avergal, Kumbakonam.]**

# BHATTA CHINTAMANI

A COMMENTARY ON

## KHANDA DEVA'S BHATTA DEEPIKA

BY

SRI VANCHESWARA YAJWAN

EDITED & PUBLISHED

BY

MAHAMAHOPADHYÂYA T. VENKATASUBBA SASTRIGAL, AVL.,

(*Sastra Ratnakara, Mimamsa Ratna, &c.*)

*late Principal, the Madras Sanskrit College, Mylapore.*



MADRAS.

1928

# PUBLISHER'S NOTE.

MYLAPORE,
*6th August*, 1928.

GENTLEMEN,

Khanda Deva's "Bhatta Deepika" is famous for its cryptic karikas and the need for an exhaustive commentary on it has been long and widely felt. "Bhatta Chintamani" written by SRI VANCHESWARA admirably supplies this want. Being the *only complete* commentary available so far, its publication has been looked for with eagerness by those interested in the subject. Its special feature lies in the fact that the author has, in his own inimitable way, brought to bear upon the work, not only his erudition in other Sastras, but also his profound knowledge of Sroutha, so very essential for a proper understanding of the original text.

The commentary has been completely examined in manuscript by its editor and publisher, the late MAHAMAHOPADHYAYA T. VENKATASUBBA SASTRIGAL (Sastra Ratnakara, Mimamsa Ratna, etc.), Principal, the Madras Sanskrit College, Mylapore. The Mahamahopadhyaya is the grand-son, through his mother, of the great Vancheswara, and it is only in the fitness of things, that the book should appear in print under his auspices. Needless to say that he was pre-eminently qualified for the task by his passion for the Sastra, born of a lifelong devotion to it, his loving respect for the memory of his author-ancestor as well as by his intimate knowledge of the difficulties of students, having been a teacher of Mimamsa, for over 30 years and as such the publication would be welcomed by students and scholars alike.

Much to our regret, he has left unfinished the work so very enthusiastically begun by him. Having felt it almost a sacred duty we have decided to see through the publication and utilise the amounts that may be realised from the sale, towards a suitable memorial in his name. The work when published will be a sort of memorial edition both of the author and its editor. The high regard in which the editor is held by His Holiness the Jagathguru Sri Sankaracharya Swamigal of Kama Koti Peetam, Kumbakonam and His unbounded love for Mimamsa, as for the other Sastras, have secured for us the sympathy and patronage of His Holiness. As it is quite necessary that as many copies of

the book as possible should be sold out for our hopes being realised, may we request you to place an order with us, for as large a number of copies as possible? Please permit us to state that, by doing so, you will be lending your valuable support for the popularisation of the Mimamsa Sastra for which the Mahamahopadhyaya laboured hard for the major portion of his life time.

Volume I of the publication will be issued in 3 parts each comprising of about 160 pages Royal. The price of each part is fixed at **Rs. 2** payable in advance or by V.P.P.—Postage extra. For those who order for Vol. I after the 3 parts has been published, the Vol. will be charged **Rs. 8.**

*Copies can be had of—*

The Publishers at No. 17, T. S. V. Koil Street,
Mylapore, Madras.

श्रीः

## भाट्टचिन्तामणिकर्तुः

## वाञ्छेश्वरयज्वनः चरित्रसङ्ग्रहः ।

आर्यमिश्राः! विदितमेवैतत्तत्रभवतां यत्किल चोलदेशे कुम्भकोणमध्यार्जुनक्षेत्रयोर्मध्ये कावेर्युत्तरतटे विद्वद्वरेण्यानां निवासभूमिः, तञ्जानगरीस्थितैः महाराष्ट्रजातीयैः **एकोजि**प्रभृतिभिः राजभिः अतीवादृतः, विद्वन्मण्डलीपरिवृतः, **तिरुविशलूर्** इत्यपराख्यया ख्यातः शहजीन्द्रपुराभिधोऽग्रहारः; यः किल तञ्जापुरीमधितिष्ठता **शहजिमहाराजेन** विद्वद्भ्यः सर्वमान्यतया प्रदत्तः ।

तामलङ्कुर्वतां विद्वन्महाशयानामन्यतमा इमे **कुट्टिशास्त्रिण** इति सर्वत्र प्रसिद्धनामधेयाः **वाञ्छेश्वरयज्वानः** होसलकर्णाटजातीयाः बाल्य एव तातपादेभ्यः श्रीयुत-**नरसिह्म**शास्त्रिभ्य एवाधीतवेद-वेदाङ्ग-व्याकरण-श्रौत-स्मार्तप्रयोगाः अहोबल-श्रीनिवास-ईश्वरगुरूत्तमेभ्यः अधीतवेदान्तन्यायमीमांसाशास्त्राः कञ्चित्कालं तञ्जापुरीनायकेन **शरभोजि**नामकेन राज्ञा प्रार्थिताः **ओरत्तनाड्** इति प्रसिद्धमुक्ताम्बाग्रहारे शिष्यानध्यापयन्तः राजानं चानुगृह्णन्तोऽवात्सुः । पश्चाच्च, कारणान्तरेण उत्तरदेशयात्राभिलाषया प्रस्थाय, पुण्याख्य (पूना) पत्तनमधिवसता महाराष्ट्रराज्याधीश्वरेण विद्वज्जीवातुना एतद्वैदुष्यपरितुष्टेन **श्रीभाजिरावूपेश्वे** राज्ञा शिबिकादिभिस्सम्मानिताः तदीयप्रार्थनया तदीयविद्वदास्थानीमलमकुर्वन् ।

एवं स्थिते कदाचित् वाराणसीयात्राभिलाषया राजानमनुज्ञाप्य प्रस्थिता एते मध्येमार्गं तत्रत्यैर्हिरण्यकेशिसूत्रिभिः हिरण्यकेशिश्रौतसूत्रव्याख्याकरणाय प्रार्थिताः तदनुरोधेनाङ्गीकृततत्कृत्याः तत्करणाय वाराणस्यां कञ्चित्कालमुषित्वा तदानीं तत्रागतान् शिष्यान् वेदान्तशास्त्रमध्यापयन्तः (१) हिरण्यकेशिसूत्रव्याख्यां, (२) तदीयसामान्यसूत्रव्याख्यां, (३) भाट्टचिन्तामणिञ्च भाट्टदीपिकाव्याख्यां, (४) श्राद्धचिन्तामणिं, (५) दत्तचिन्तामणिं, (६) अद्वैतचिन्तामणिं, (७) धूर्गानचन्द्रिकां, (८) काकतालीयवादार्थं, स्वप्रपितामहनिर्मितेषु आशीर्वादशतक-तुरगशतक-महिषशतकाख्यग्रन्थत्रितयेषु (९) महिषशतकव्याख्यां, (१०)श्लेषार्थचन्द्रिकां चारचयामासुः । तत्कृतग्रन्थाश्च ग्रन्थप्रारम्भलिखितैः श्लोकैरवगन्तव्याः ।

अनन्तरं च वाराणसीतः प्रतिनिवर्तमानाः पुण्याख्य (पूना) पत्तने राज्ञो यशश्शरीरतया तन्मार्गेणैव **महीशूरपुरीं** प्राप्ताः तत्रत्येन राज्ञा **श्रीकृष्णराजाभिधेन** सादरं पुण्याख्यपत्तनस्थराजनिर्विशेषं शिबिकादिभिस्सम्भाविताः राज्ञः विद्वदास्थानीमलञ्चक्रुः ।

तदानीं, "एते मुक्ताम्बाप्रहारात्प्रस्थानात्पूर्वमेव भार्यावियोगं प्राप्तवन्तोऽपि अनूढभार्या एवासन्" इति तत्रत्यैः स्वबन्धुभिः प्रार्थिताः कन्यामुदूह्य तस्यां कुमारद्वितयं कुमारीमेकां चाजनयन्; याऽस्मत्पितामही कामाक्षीनाम्नी । अत एवास्मत्तातपादानां मातामहनिर्मितग्रन्थप्रकाशनेऽतीव प्रयत्नो फलपर्यवसायी च । उदूढभार्याश्चैते क्रमेण कृष्णराजसाहाय्येन ज्योतिष्टोमादिकान् क्रतून् सर्वांश्च निरवर्तयन् । तेषां ज्येष्ठकुमारैः श्रीयुत-**स्वामिशास्त्रिभिः** तातपादनिर्मितायां भाट्टचिन्तामण्यभिधायां भाट्टदीपिकाव्याख्यायां बहवो विषयाः निर्वचनपूर्वकं विचार्य विस्तारिताः । द्वितीयकुमाराश्च श्रीयुत-**नरसिंहशास्त्रिणः** पञ्चदशसंवत्सरेभ्यः पूर्वकालपर्यन्तं महीशूरपूरे महाराजश्री-**कृष्णराज-चामराज--कृष्णराजाभिधैः** त्रिभिरपि राजभिरतीव सम्भाविताः धर्माधिकारपदमलङ्कुर्वन्त आसन् ।

एते वाञ्छेश्वरयज्वानश्च स्वेच्छया कञ्चित्कालं महीशूरपुरीं, कञ्चित्कालं शहजीन्द्रपुरे, कञ्चित्कालं **काञ्चीकामकोटिपीठाधिपतीनां जगद्गुरूणां शङ्कराचार्याणां** विद्वदास्थानीं चालञ्चक्रुः । विस्तरश्चानुपदमेव मुद्रापयिष्यमाणग्रन्थकर्तृचरित्रतोऽवगन्तव्यः ॥

इति सज्जनविधेयः

मैलापूर्
२०-८-२८.

**ति. वे. वेङ्कटरामशास्त्री**
प्रथमपण्डितः, अडैयार्-पुस्तकालयम्



## ॥ महामहोपाध्याय–श्रीवेङ्कटसुब्बाशास्त्रिणः ॥

### स्मरणम्

हा हन्त कीदृशास्ते ते विलासालापाः ! कीदृश्यः सरसपरिहाससूक्तयः ! कियन्नैपुण्यं दुरूहकर्कशशास्त्रार्थशिक्षणे ! कियत्तत्त्वार्थनिर्णये स्वातन्त्र्यम् ! कियती प्रार्थना शिष्यलोकसमुन्नतौ ! कियती श्रद्धा सनातनधर्मेषु ! कियान् बहुमानः पण्डितलोकेषु विद्याशीलवृद्धेषु ! कियानुद्योगः पूर्वोत्तरतन्त्रप्रचारणे ! कियती निर्डम्बरता दैनन्दिनेषु परिकर्मसु ! समयेऽस्मिन् प्रबोधितानि **श्रीमहामहोपाध्यायानां वेङ्कटसुब्रह्मण्यशास्त्रिवर्याणां** अपदानान्यस्मदन्तरङ्गरङ्गे क्रमेणापतन्ति वर्तमानानीव भासमानानि मृतान्यवगम्यन्ते ! हाः कष्टम् शिष्यलोकस्य ! अहो दौर्भाग्यं सुहृज्जनानाम् ! हा दुष्कर्मपरिपाको बन्धुवर्गस्य ! का दुर्दशा पण्डितलोकस्य ! अहो दौरात्म्यम् दैवहतकस्य ! अहो कौटिल्यं कालस्य ! अथवा किमनेन वृत्तानुवर्णनेन । निस्संशयं असारः संसारः । कति यान्ति ; कति वाऽऽयान्ति दिने दिने । कति तेषु उदारचारिताः ? विरलाः खलु तादृशा महनीयचरिताः । हन्त, सर्वेप्येते क्षणात् संस्मरणीयेतिवृत्ता वृत्ताः । तेषु अस्मदाचार्यपाद इदानीं अन्यतमः स्मर्यते । पौषशुक्लद्वादशी किल अतिदारुणा अस्मल्लोकयात्रायां अविस्मरणीया या च, गाढान्धतमसावृता अस्मदन्तिकात् आचार्यवर्यं मुषित्वा मूर्धनि नः कुलिशपातं पातयाम्बभूव । तदा किल सर्वमिदं जगत् परिदृश्यमानमस्माकं, तत्त्वतः, शून्यमिवादृश्यत । अभवाम खलु तदा वयं निस्सीमनि दुःखसागरे लग्नाः विपथं गताः समुत्पन्नदिङ्मोहा नाविका इव इतिकर्तव्यतामूढमानसाः । अथ कथञ्चिन्नो मनांसि समाश्वासयाम एवं यत् अस्मदाचार्यवर्यो विसृष्टभौतिकशरीरोऽपि सूक्ष्मेण शरीरेणास्मासु भासमान अनुगृह्णीयाच्छिष्यलोकान् इति ।क्षणेऽस्मिन् पुरतो न आयान्तीव भाति अस्मदाचार्यमुर्तिः तप्तकाञ्चनसन्निभदीप्तिः । अधमर्णाः खलु वयं–पण्डितलोकाः, तस्मै गुरुवर्याय यः खलु मन्दाकिनीमिव भगीरथो महता यत्नेन पूर्वमीमांसामानाय्य तत्प्रसारणमेवात्मनः कृत्यममनुत । परिमितप्रज्ञानामपि सुबोधाभिः सूक्तिभिरतिकर्कशशास्त्रार्थप्रबोधने शास्त्रिवर्यस्यानितरसाधारणीं नैपुणीं जानन्त्येव ते शिष्यलोकाः प्रियसुहृदो विद्वांसश्च, ये तदीयानतिमनोहरानुपन्यासान् श्रोतुं लब्धावसरा अभवन् । तदीयोपन्यासामृतपिपासयैव हि बहवोऽध्येतारः उच्चावचेभ्यः प्रान्तेभ्यस्समागच्छन् तदधिष्ठितायां कलाशालायाम् ।

तत्तादृशं पाण्डित्यमस्मच्छास्त्रिवर्यस्य, मन्ये, जानन्त्येव भवन्तः, वंशागतं पित्र्यं धनमिति । पिता किल शास्त्रिमहाशयस्य रायल वेङ्कटरामशास्त्रिनामालङ्कृतः अधीती साङ्गवेदे सुप्रथितश्च । स तु कुम्भकोणस्थ-श्रीकाञ्चीकामकोटिपीठाधिपतीनामास्थाने पण्डितपदमलञ्चकार। प्रपितामहोऽपि महापण्डितस्तत्रैव नगरे श्रीडबीरूस्वामिना कल्पितेषु गृह-दानेषु अन्यतमस्य प्रतिगृहीतृभावं प्रापितः पुरुषधौरेयोऽभूत् अस्मच्छास्त्रिवंशीयानामिदानीं कुम्भकोणे तत्परिसरे च वर्तिनां बान्धवानाम् । मातामहस्सुगृहीतनामधेयः **श्रीवाञ्छेश्वरबुधः कुट्टिशास्त्री**त्यपरनामकः प्रबन्धा बहूनां प्रबन्धानां, नियन्ता च सर्वतन्त्राणामप्रथत पण्डितकुलललामभूतः । एवं सुप्रथितानां पण्डितरत्नानां वंशादुत्पन्नं पण्डितरत्नमेव किल समजनि। नन्वतिमहनीयानां रत्नानामाकरात् कौस्तुभस्समजनीति को वा विस्मयः ?

समयेऽस्मिन् मम मनसि अद्यैव कथितानीव परिवर्तन्ते कानिचिद्वचनानि अस्मच्छास्त्रिवर्येण स्वीयं विद्याभ्यसनमधिकृत्य क्वचित् प्रसङ्गात् प्रकटितानि । शास्त्रिपादो हि स्वपितुस्सकाशे साङ्गं वेदमधीत्य बाल्ये, ततः पण्डित-श्रीरामचन्द्रशास्त्रिणः सकाशे काव्यादिकं, श्रीमहालिङ्गशास्त्रिणः सकाशे न्यायशास्त्रादिकं, **महामहोपाध्याय श्रीरामसुब्रह्मण्यशास्त्रिणां** सकाशे पूर्वोत्तरतन्त्रे विशिष्टाद्वैतञ्च अधीयानः प्राचीनया शैल्या तस्मिन् तस्मिन् काले तांस्तान् शुश्रूषादिना प्रीणयन् विद्यां अभिवर्धयति स्म। तत्र पूर्वमीमांसापठनपद्धतिमस्मदाचार्यवर्यस्य उपश्रृण्वन् को वा न विस्मयमावहेत् ? ते हि श्रीरामसुब्रह्मण्यशास्त्रिणः स्वस्य उत्तरमीमांसा-तन्त्रप्रवचने आदरातिशयमाविष्कुर्वन्तः तत्प्रवचनसमनन्तरमवसाने दिनस्य अत्यल्पमेव कालं यापयेयुः पूर्वतन्त्रप्रवचने । एवं अहरहः तस्मिन्नत्यल्पे काल एव कणशः कणशः पूर्वमीमांसामधीत्य अनल्पायासेन तच्छास्त्रस्य पारदृश्वा समजनि शास्त्रिवर्यः ।

**सुहृदः!**

अवसरेऽस्मिन् भवतः संस्मारयामि यदस्मदाचार्यवर्यस्य अस्मद्भारतीये सनातने धर्मे कियान् श्रद्धातिशयः, एकविधा च मतिरभूदिति । विदितं वः समेषां यत् यदा बहवः पण्डितप्रकाण्डाः आधुनिकसङ्घसंस्करणपिशाचदूषिताः तद्वशानुवर्तितया शिरः कम्पयन्तः तस्थुः ; तदा अस्मच्छास्त्रिवर्यः तादृशस्य कोलाहलस्य निर्लेपः समभूदिति । तत्तादृशधीरभावस्य बाल्ये प्राचीनपद्धत्या विद्याभ्यासं सदाचार्यसंसेवनञ्च विहाय नान्यत्किञ्चिन्निदानं प्रतिभाति नः ।

एवं निखिलतन्त्रेषूपदेशग्रहणसमनन्तरमस्मच्छास्त्रिवर्यः क्रमेण महीशूरपुर-पुदुक्कोट्टाप्रभृतिराजसभासु मीमांसायामुत्तमां परीक्षां दत्वा अनुत्तमे विभागे समुत्तीर्णो बह्वमन्यत प्रशस्यतमैः सत्कारैः । तत्समनन्तरं हि श्रीकाञ्चीकामकोटिपीठाधिपतीनामादेशतस्तन्निकटे

पण्डिताध्यक्षपदमलञ्चकार । एवं स्थिते तदानीं मद्रमण्डलाधिपन्यायसचिवेन सुगृहीतनामधेयेन **श्री. वि. कृष्णस्वाम्यार्यमहाभागेन** स्वीयविद्यालये पाठनाय मार्गणपुरस्सरं सङ्गृहीतेषु पण्डितरत्नेषु अन्यतमभावेन परिगणितोऽस्मच्छास्त्रिवर्यो मद्रपुरीमानायि । ततःप्रभृति तद्विद्यालये मीमांसाशास्त्रमनल्पेन कौतूहलेन शिष्यानध्यापयन् यशसा विरराज । एवं गते कस्मिंश्चित् काले शास्त्रिवर्यः श्रीकाञ्चीकामकोटिपीठाधिपैः समादृतासु कुम्भकोणादिनगरेषु प्रचलितासु अद्वैतसभासु, तथा, मद्रपुर-वारणसीविश्वविद्यापीठयोः प्राच्यविद्याविभागे, महीशूरपुरराजसभायाञ्च परीक्षकपदमधिरुरोह । तथा लब्धावसरश्शास्त्रिवर्यो मद्रपुरसंस्कृतविद्यालये अध्यक्षपदे अधिकृतो बभौ । अनन्तरं विविधानि बिरुदानि तदीयेन यशसा समाहूतानीव अस्मदध्यक्षं अलभन्त । श्रीकाञ्चीकामकोटिपीठमलङ्कुर्वाणा जगद्गुरुश्रीशङ्कराचार्याः पाण्डित्यसौशील्यादिगरिमसंसूचिना **शास्त्ररत्नाकर**बिरुदेन शास्त्रिवर्यं भूषयन्ति स्म । तथा श्रीकाशीस्थभारतधर्ममहामण्डली **मीमांसारत्न**समाख्यया तं सम्भावयामास । तदनन्तरमस्मद्विश्वविद्यापीठाधिपः विदित्वा तत्पाण्डित्यगरिमाणं अस्यां पुर्यां युवराजसमागममहोत्सवे समुचितेन सत्कारेण शास्त्रिवर्यमभूषयत् । ततोऽस्मद्राजप्रतिनिधिना समर्पिता **"महामहोपाध्याया"**ख्या स्वबुभूषयिषेव शास्त्रिवर्यमुपतस्थौ । तथा तथा भूषितः पूजितश्चास्मदाचार्यवर्य इदानीं संस्मरणीयमूर्तिस्सन् विहाय अस्मदन्तिकं दिव्यसत्कारप्रतिजिघृक्षयेव हठाल्लोकान्तरं उपारूढ इत्यहो दौर्जन्यं कालस्य !

सुहृदः प्रेष्ठाः !

भवतां मतिगोचारमेवैतत् यदस्मदाचार्यवर्यः पूर्वतन्त्रप्रवचनप्रचारणादिकमेव आदिमं पुरुषार्थममन्यत । तत्र च निदानं, मन्ये, पूर्वतन्त्राध्ययनविषये स्वानुभूतः क्लेशः परान् मा संक्रमिष्ट इति दृढसङ्कल्प एव शास्त्रिवर्यस्य । अद्यापि तान् दिवसान् स्मरामः येषु अस्मदाचार्यवर्यः, न केवलं विद्यालये, यावद्गृहेऽपि अतिकौतूहलेन पूर्वतन्त्ररहस्यानि रात्रिन्दिवं अविगणय्य कालनियमं परिश्रमञ्च अध्यापयन्, सनातनधर्मोपदेशैकफलैर्विविधशास्त्रार्थामर्शिभिः हृदयङ्गमैरुपन्यासैः श्रोतृजनेषु पीयूषमभिवर्षन्, तथा प्रवचनोपन्यासाभ्यामन्यस्मिन्काले लब्धे चावकाशे श्रीवाल्मीकिरामायण-श्रीभागवतपठनेन निरतिशयभक्तिरसमास्वादयन् कालं यापयति स्म । एतच्च अस्मादृशाः केचित् अत्यन्तं तत्परिसरचारिण एव जानीयुः यत् शास्त्रिवर्यः श्रीमद्रामायणे श्रीमद्भागवते च भगवद्भक्तिरससमुज्जीवनोपनिषन्मतिं निदधे ।

त्रमणयः!

शिष्येषु वात्सल्यं स्वपूर्वोत्तरतन्त्रगुरूणां सकाशात् अध्ययनात् सङ्क्रान्तमिव त्र्ये । अर्द्धापराधा अपि ये शिष्याः तदनुतापमनुपदमन्वभवन्नच्छलं, तेषु वात्सल्यभारं बभारास्मदाचार्यवर्यः । एतं हि अनुत्तमं स्वभावं मन्ये, यतः "प्रमादः । धर्मः, तत्क्षमा च सज्जनसाधारणी" ।

ाकदा वयमानृण्याविश्चिकीर्षया यदा शुश्रूषादिकं कर्तुं अवसरं प्रतीक्षमाणाः अस्मत्परिश्रमासहिष्णुरिव स्वयमेव तत्कार्यचिकीर्षया यतेत । अन्यानि कार्याणि त् कारयितुमस्माभिरुररीकुर्यात् ; न तु कदापि देवताराधनाय कुसुमान्याहर्तु- विना कादाचित्कीं अभ्यनुजानीयादन्यान् ; यतः इदमेवानुत्तमात्मलाभप्रापणचणं ते ।

द्रां षष्ठ्या महोत्सवे समयान्तरे च अस्मदानृण्यप्रकटनाय गुरुभक्ति- ामुपहारं कञ्चिदुपाहर्तुं कृतोद्यमा वयं तमङ्गीकर्तुं अस्मद्गुरुवर्यं प्रार्थयामहे स्म । विद्यापरिपालनसुविनियोगप्रचारणादिना यावान्गुरुभक्तिभारः प्रकटितो भवेत्, नैतादृशेनोद्यमेनाविष्क्रियेत । अतो न मह्यं रोचतेऽयमुद्यम इति प्रत्यभाषत । तेवचनेन अस्मद्गुरुवर्यः आत्मीयगुरुभक्तिप्रकटनक्रममेव आत्मनानुष्ठीयमानं ारमं जीवितमाविश्चकारेति मतिरस्माकम् ।

खलु परमं विषादस्थानं यत् प्रायेण विद्या स्मयदूषिता अप्रकाशमाना कुहचित् ति ; परन्तु एतादृशस्य प्रायोवादस्य गतिः क्वचित् पण्डितरत्नेषु कुण्ठिता दृश्यते । ायित्वेन परिगणितोऽस्मदाचार्यवर्य इत्यत्र को वा विसंवदेत् ? निस्मयता, व हि पण्डितानां परमं भूषणमित्यस्मच्छास्त्रिवर्यस्याशयः । शास्त्रिवर्योऽप्यनेन षेतो बभाविति नात्र विशयलेशोऽपि । कदाचित् अस्मच्छास्त्रिवर्ये कुम्भकोणं प्रति सीतः कश्चित् पण्डितवर्यस्तत्र आगत्य अस्मच्छास्त्रिमहोदयं द्रष्टुकामः कुत्र सन्ति इति मार्गमाणः अन्तत अस्मच्छास्त्रिपादान्तिकमेवागत्य "कुत्रास्ते वेङ्कटसुब्रह्मण्य- ायः" इत्यपृच्छत् । ततः समीपवर्तिना केनचित् शास्त्रिवर्यं मुखेन निर्दिश्य इति प्रत्युक्तः स पण्डितः "न इमं, अपि तु बडाशास्त्रिमहाशयं मद्रपुरीसंस्कृत-

कलाशालाप्रधानाध्यापकं द्रष्टुकामोऽस्मि" इति पुनरवादीत् । तदनन्तरं अस्मच्छास्त्रिमहाशयेन स्पष्टं ज्ञापितः स पण्डितः "भौतिकयशःकाययोः कियदन्तरम् एतेषु !" इत्याश्चर्याविष्टचित्तः सन् श्रद्दधे ।

ये ये शास्त्रिवर्यं द्रष्टुमागच्छन्ति--पण्डितः पामरो वा, बालः स्थविरो वा, धनिको दरिद्रो वा--तान् सर्वान् समुचितेन सरसालापेन तोषयित्वा चित्तमाकर्षतीतीदं स्वभाव-सिद्धमस्मच्छास्त्रिवर्यस्य। तस्य निर्वाणानन्तरमेकदा शोककथालापे केनचित्प्रियसुहृदा परि-देवितमेवं यत् झटिति प्रेमलतासमुज्जीवी प्रियालापः असाधारणो गुणः शास्त्रिवर्यस्य; स चेदानीं प्रायो विरलोऽभूत् । तस्मात् यो यः शास्त्रिपादस्यान्तिकं प्रथमपरिचयाय समायाति स सर्वः स्नेहपरिपोषयित्रा वचनेन आकृष्टचित्तः तदन्तिकं हातुं न शक्नुयात् इतीयमुक्तिः न लेशेनाप्यत्युक्तिगन्धं स्पृशति । समये चास्मिन् मम मानससरणिमधिरोहति कस्यचित्प्रियसुहृदो गुणग्राहि वचनं "To know him was to love him." इति ।

अन्यः कश्चित् असाधारणो गुणोऽस्मच्छास्त्रिवर्यस्य यत् निरुद्यमं यदृच्छया यत्प्राप्यते तेन तुष्यतीति । मद्रपुरेऽस्मिन् शास्त्रिवर्यः द्वाविंशतिवर्षकालमधिवसन्नभूत् । एतं कालं यावत्, नाद्राक्ष्म, नतरां अश्रृणवाम, यत् शास्त्रिवर्यः स्वीयाकिञ्चन्यमहिम्ना सनातनधर्मादपेते पथि कदाचिदपि पदं न्यधत्त; अथवा अपरिज्ञातस्वपाण्डित्यगौरवं अपरिचितं अविनीतमैक्षत कटाक्षेणापि । एतादृशोऽतिश्लाघनीयो गुणोऽस्मच्छास्त्रिपादेन स्वपूर्वोत्तरतन्त्राचार्यादेवाधीत इति दृढमस्माकमाशयः । पण्डितलोकानां अनल्पगरिमोत्कर्षं पोषयन्तः एतादृशाः पण्डित-मणयः प्रायो विरलविरला अभूवन् इत्यहो दौर्भाग्यमस्माकम् !

परं तु गुणाः पूजास्थानमेवेत्याशयश्शास्त्रिपादस्येति तर्कयितुं शक्नुमः । स हि अस्म द्भारतीयविद्याभ्युदयस्य कृते कृतदृढसङ्कल्पानां कृतसङ्कल्पमनुष्ठितवतां स्वदेशसमुन्नतिमनवरत-मभिकाङ्क्षमाणानां च महापुरुषाणामग्रगण्यममनुत दिवंगतं **वि. कृष्णस्वाम्यार्यमहाभागम् ।** अत एव शास्त्रिवर्यः तस्य महाभागस्य भारतीयविद्यायाः कृते कृतं त्यागं स्मारं स्मारं श्लाघयामास तस्यौदार्यं सूक्ष्मदर्शित्वं च; यतः स धर्मस्य गुरुलाघवं, विद्याभ्युदयस्य समीचीनमुपायं च विविच्य सूक्ष्मया दृष्ट्या धर्मरक्षणाद्यसाधनीभूतशरीररक्षणाय निखिलजनोपकारिवैद्यविद्यालयं, तथा तुरीयपुरुषार्थसाधनीभूतात्मज्ञानपोषणाय पूर्वोत्तरतन्त्रविद्यालयं च प्रतिष्ठापयामास ।

**मान्याः!**

विद्यालये चास्मिन्नाचार्यवर्यः द्वाविंशतिवर्षाणि विद्यामध्यापयामास; तत्र चोत्तरस्मिन् भागे वर्षाष्टकमध्यक्षपदमलञ्चकारेत्यपरोक्षमेव भवताम् । स्वाध्यक्ष्यकाले विद्यालयाभ्युदय-

**मित्रमणयः!**

स्वशिष्येषु वात्सल्यं स्वपूर्वोत्तरतन्त्रगुरूणां सकाशात् अध्ययनात् सङ्क्रान्तमिव बभौ शास्त्रिवर्ये। अर्द्रापराधा अपि ये शिष्याः तदनुतापमनुपदमन्वभवन्नच्छलं, तेषु असाधारणं वात्सल्यभारं बभारास्मदाचार्यवर्यः। एतं हि अनुत्तमं स्वभावं मन्ये, यतः "प्रमादः किल मानुषो धर्मः, तत्क्षमा च सज्जनसाधारणी"।

अनेकदा वयमानृण्याविश्चिकीर्षया यदा शुश्रूषादिकं कर्तुं अवसरं प्रतीक्षमाणाः स्याम तदा अस्मत्परिश्रमासहिष्णुरिव स्वयमेव तत्कार्यचिकीर्षया यतेत। अन्यानि कार्याणि यदाकदाचित् कारयितुमस्माभिरुररीकुर्यात्; न तु कदापि देवताराधनाय कुसुमान्याहर्तुमावश्यकतां विना कादाचित्कीं अभ्यनुजानीयादन्यान्; यतः इदमेवानुत्तमात्मलाभप्रापणचणं श्रुतिभिर्गीयते।

शरदां षष्ठ्या महोत्सवे समयान्तरे च अस्मदानृण्यप्रकटनाय गुरुभक्तिभारसंसूचिनमुपहारं कश्चिदुपाहर्तुं कृतोद्यमा वयं तमङ्गीकर्तुं अस्मद्गुरुवर्यं प्रार्थयामहे स्म। तदा अधीतविद्यापरिपालनसुविनियोगप्रचारणादिना यावान्गुरुभक्तिभारः प्रकटितो भवेत्, तदंशोऽपि नेतादृशेनोद्यमेनाविष्क्रियेत। अतो न मह्यं रोचतेऽयमुद्यम इति प्रत्यभाषत। अनेन प्रतिवचनेन अस्मद्गुरुवर्यः आत्मीयगुरुभक्तिप्रकटनक्रममेव आत्मनानुष्ठीयमानं स्वजन्मनः परमं जीवितमाविश्चकारेति मतिरस्माकम्।

इदं खलु परमं विषादस्थानं यत् प्रायेण विद्या स्मयदूषिता अप्रकाशमाना कुहचित् विलीना भवति; परन्तु एतादृशस्य प्रायोवादस्य गतिः क्वचित् पण्डितवरेषु कुण्ठिता दृश्यते। तेषां अग्रयायित्वेन परिगणितोऽस्मदाचार्यवर्य इत्यत्र को वा विसंवदेत्? निस्स्मयता, निर्दम्भता चैव हि पण्डितानां परमं भूषणमित्यस्मच्छास्त्रिवर्यस्याशयः। शास्त्रिवर्योऽप्यनेन भूषणेन भूषितो बभाविति नात्र विशयलेशोऽपि। कदाचित् अस्मच्छास्त्रिवर्ये कुम्भकोणं प्रति याते वाराणसीतः कश्चित् पण्डितवर्यस्तत्र आगत्य अस्मच्छास्त्रिमहोदयं द्रष्टुकामः कुत्र सन्ति शास्त्रिपादा इति मार्गमाणः अन्तत अस्मच्छास्त्रिपादान्तिकमेवागत्य "कुत्रास्ते वेङ्कटसुब्रह्मण्यशास्त्रिमहाशयः" इत्यपृच्छत्। ततः समीपर्तिना केनचित् शास्त्रिवर्यं मुखेन निर्दिश्य इत आस्ते इति प्रत्युक्तः स पण्डितः "न इमं, अपि तु बडाशास्त्रिमहाशयं मद्रपुरीसंस्कृत-

कलाशालाप्रधानाध्यापकं द्रष्टुकामोऽस्मि" इति पुनरवादीत् । तदनन्तरं अस्मच्छास्त्रिमहाशयेन स्पष्टं ज्ञापितः स पण्डितः "भौतिकयशःकाययोः कियदन्तरम् एतेषु !" इत्याश्चर्याविष्टचित्तः सन् श्रद्दधे ।

सुहृदः !

ये ये शास्त्रिवर्यं द्रष्टुमागच्छन्ति--पण्डितः पामरो वा, बालः स्थविरो वा, धनिको दरिद्रो वा—तान् सर्वान् समुचितेन सरसालापेन तोषयित्वा चित्तमाकर्षतीतीदं स्वभावसिद्धमस्मच्छास्त्रिवर्यस्य। तस्य निर्वाणानन्तरमेकदा शोककथालापे केनचित्प्रियसुहृदा परिदेवितमेवं यत् झटिति प्रेमलतासमुज्जीवी प्रियालापः असाधारणो गुणः शास्त्रिवर्यस्य ; स चेदानीं प्रायो विरलोऽभूत् । तस्मात् यो यः शास्त्रिपादस्यान्तिकं प्रथमपरिचयाय समायाति स सर्वः स्नेहपरिपोषयित्रा वचनेन आकृष्टचित्तः तदन्तिकं हातुं न शक्नुयात् इतीयमुक्तिः न लेशेनाप्यत्युक्तिगन्धं स्पृशति । समये चास्मिन् मम मानससरणिमधिरोहति कस्यचित्प्रियसुहृदो गुणग्राहि वचनं "To know him was to love him." इति ।

अन्यः कश्चित् असाधारणो गुणोऽस्मच्छास्त्रिवर्यस्य यत् निरुद्यमं यदृच्छया यत्प्राप्यते तेन तुष्यतीति । मद्रपुरेऽस्मिन् शास्त्रिवर्यः द्वाविंशतिवर्षकालमधिवसन्नभूत् । एतं कालं यावत्, नाद्राक्ष्म, नतरां अशृणवाम, यत् शास्त्रिवर्यः स्वीयाकिञ्चन्यमहिम्ना सनातनधर्मादपेते पथि कदाचिदपि पदं न्यधत्त ; अथवा अपरिज्ञातस्वपाण्डित्यगौरवं अपरिचितं अविनीतमैक्षत कटाक्षेणापि । एतादृशोऽतिश्लाघनीयो गुणोऽस्मच्छास्त्रिपादेन स्वपूर्वोत्तरतन्त्राचार्यादेवाधीत इति दृढमस्माकमाशयः । पण्डितलोकानां अनल्पगरिमोत्कर्षं पोषयन्तः एतादृशाः पण्डितमणयः प्रायो विरलविरला अभूवन् इत्यहो दौर्भाग्यमस्माकम् !

परं तु गुणाः पूजास्थानमेवेत्याशयश्शास्त्रिपादस्येति तर्कयितुं शक्नुमः । स हि अस्मद्भारतीयविद्याभ्युदयस्य कृते कृतदृढसङ्कल्पानां कृतसङ्कल्पमनुष्ठितवतां स्वदेशसमुन्नतिमनवरतमभिकाङ्क्षमाणानां च महापुरुषाणामग्रगण्यममनुत दिवंगतं वि. कृष्णस्वाम्यार्यमहाभागम् । अत एव शास्त्रिवर्यः तस्य महाभागस्य भारतीयविद्यायाः कृते कृतं त्यागं स्मारं स्मारं श्लाघयामास तस्यौदार्यं सूक्ष्मदर्शित्वं च; यतः स धर्मस्य गुरुलाघवं, विद्याभ्युदयस्य समीचीनमुपायं च विविच्य सूक्ष्मया दृष्ट्या धर्मरक्षणाद्यसाधनीभूतशरीररक्षणाय निखिलजनोपकारिवैद्यविद्यालयं, तथा तुरीयपुरुषार्थसाधनीभूतात्मज्ञानपोषणाय पूर्वोत्तरतन्त्रविद्यालयं च प्रतिष्ठापयामास ।

मान्याः!

विद्यालये चास्मिन्नाचार्यवर्यः द्वाविंशतिवर्षाणि विद्यामध्यापयामास ; तत्र चोत्तरस्मिन् भागे वर्षाष्टकमध्यक्षपदमलञ्चकारेत्यपरोक्षमेव भवताम् । स्वाध्यक्ष्यकाले विद्यालयाभ्युदय-

निमित्तं शास्त्रिवर्येण बहुधा प्रयासोऽकारि इतीदं को वाऽपलपेत्? विद्यार्थिसम्पदधिना हि विद्यालयसमुन्नतिरिति मनसि कृत्वा उपन्यासनिमित्तं तं तं देशमलङ्कुर्वाणश्शास्त्रिवर्यः साधुसमर्थविद्यार्थिसङ्ग्रहाय कृतोद्यमः स्वमनोरथमकृतार्थयत् । कस्मिंश्चिदवसरे शास्त्रिवर्यस्य उक्तिं श्रुतवन्तो जानीयुः तस्य कियती प्रत्याशाऽभूद्विद्यालयस्य विद्यार्थिनां च समुन्नतौ । शास्त्रिवर्यस्य **महामहोपाध्याय**बिरुदवितरणसमये तदानीन्तनन्यायसाचिवं Sir. C. P. **रामस्वाम्यार्यवर्यं** अङ्गीकृत्याग्रिमासने प्रचलितायामभिनन्दनसभायां बहुधा बहुषु अभिनन्दयत्सु दिवंगतः श्रीमान् M. O. पार्थसारथिमहोदयः एवमवादीत् :—

"Sometimes *titles* reflect honour upon men and sometimes *men* reflect honour upon titles. This is a case where man reflects honour upon title."

सर्वानेतान् शास्त्रिवर्यः प्रत्यभाषतैवं यत् ममैतद्बिरुददानेन तावान् हर्षो न जायते यावान् हर्षो बहुमानश्च मम जायेतैतद्विद्यालये गृहीतविद्यवरिष्ठानामेतद्बिरुदवितरणेन ; अतस्तमेव कालं सम्प्रार्थये यत्र बहवोऽस्मच्छात्रास्तद्बिरुदसम्मानिताः सम्माननीयाश्च स्युः । तदेतज्जानन्ति भवन्तः यत् शास्त्रिपादप्रार्थनासमनन्तरे हायन एव कल्कत्ताविश्वविद्यालये पूर्वोत्तरतन्त्राध्यापकः श्रीअनन्तकृष्णशास्त्रिवर्यः तद्बिरुदमलभत । एवमुन्नत्याशासनैकमनस्कः कलाशालामिमां दुहितरमिव वर्षाष्टकं पालयन् अस्मच्छास्त्रिवर्यः तामन्यस्मै प्रदाय निर्मुक्तभौतिकप्रपञ्चं प्रशान्तं पदं अभिरन्तुकाम इव हठात्तिरोभूदितीदं दुनोति नो मनांसि ।

**सुहृन्मणयः !**

गते च वत्सरे मद्रपुरविश्वविद्यापीठः विद्वच्छिरोमणिपरीक्षकसमितावग्रिमासने नियम्य शास्त्रिपादं बहुमन्यतेत्ययमुदन्तः प्रमोदावहो ननु सर्वेषाम् । शास्त्रिवर्यो हि अग्रयायी पण्डितानां अस्मिन्मद्रमण्डले तत्समितावग्रिमासनमलङ्कृत्य सत्कारमधिगन्तुम् । एतादृशं च सत्कारं प्रथमतोऽस्मच्छास्त्रिवर्याय उपाहृतवानस्मद्विश्वविद्यापीठः प्राचीनविद्वत्सु अमुमेव वरेण्यं अमनुतेव ।

**मित्रमणयः!**

जानन्ति ननु भवन्तः यत् अस्मदाचार्यवर्यः स्वमातामहस्य **श्रीवाञ्छेश्वरयज्वनः** प्रबन्धान् **भाट्टचिन्तामणि**प्रभृतीन् मुद्राप्य स्वायुषि स्वपूर्ववंशीयान्यृणान्यपाकर्तुं बहुधा कृतोद्यमोऽपि बहोः कालादर्वागेव भाट्टचिन्तामणिप्रबन्धमुद्रणमारब्धुमपारयत् उदारमादरमवलम्ब्य **श्रीमत्यतीन्द्राणामिदानीं श्रीकाञ्चीकामकोटिपीठमलङ्कुर्वाणानां** ; येषामुदारहृदयता

सनातनमर्थैकतानमनस्कता, हृदयङ्गमधर्मोपदेशचातुरी, शिष्यजनतासमुन्नतिसम्पत्त्यै स्वप्नेऽपि समादृतः साधुचारः, साधुसङ्कल्पः, वैदिकधर्मपुनरुज्जीवनपरायणा प्रवृत्तिरित्यादिभिरनन्तैः कान्तैः यतीन्द्रगुणैरभिगम्यतामधृष्यतां च स्मारं स्मारमसकृच्छ्लाघापरवशो भवेदस्मदाचार्यवर्यः । तादृशानां महनीयचरितानां, अस्मच्छास्त्रिवर्यस्य महनीयान् गुणान् निपुणं जानतां अस्मज्जगद्गुरुवर्याणां, श्रीमद्यतीन्द्राणां सहाय्यतस्समारब्धं तत्प्रबन्धप्रकाशनं समग्रतामसमानीय हठात् अन्यत्र कुतुकाविष्टचित्त इव कुहचित्तिरोदधे अस्मच्छास्त्रिवर्य इति मनसि कुर्वतां नः चित्तानि खेदमावहन्तितमाम् । असंशयमस्मदाचार्यवर्यः तिरोदधे ; अथापि अस्मत्पूज्यपादैः प्रतिष्ठापितः विद्यावंशः छात्रवंशश्च न तिरोधत्ते, नतरां तिरोधास्यते । किंतु तद्विद्यावंशानुवृत्तिकाङ्क्षिणां नः अस्मत्प्राचीनविद्याप्रणयिनां सुहृदां च एतदवश्यकर्तव्यं यत् अस्मदाचार्यवर्येन समारब्धं कार्यं सर्वथा समापनीयं, तदानुकूल्येण सर्वथा यतितव्यं चेति

तथापीदं सम्प्रार्थये,

जयतु जयतु चित्ते शास्त्रिवर्यः सदा नः,
जयतु जयतु गोष्ठ्यां पण्डितानां यशोऽस्य
जयतु जयतु विद्यावंश एषोऽस्मदीयः,
जयतु जयतु लोके छात्रवृन्दं यशस्वि ॥

अय्यास्वामिनः

* शहजीन्द्रपुरापराभिधे तिरुविशल्लूर्ग्रामे रुधिरोद्गारिवत्सरे (14-2-1864) शास्त्रिवर्यो जनिमलभत । तस्य पिता रायलु वेङ्कटरामशास्त्रिनामकः प्रथितः पण्डितः । माता कामाक्ष्यभिधा सर्वतन्त्रस्वतन्त्रश्रीवाञ्छेश्वरयज्वनो दुहिता । शास्त्रिवर्यः विधिवदुपनयनसमनन्तरं स्वपित्रादीनां सकाशे वेदं क्रमेण काव्यादिकञ्चाधीत्य महामहोपाध्याय**श्रीरामसुब्रह्मण्यशास्त्रिणां** सकाशे पूर्वोत्तरतन्त्रे अध्यगीष्ट । सर्वधारिवत्सरे (1888) मद्रपुर्यां पार्थसारथिस्वामिसन्निधिसम्प्रदाये सुप्रतिष्ठितायां श्रीमद्वेदवेदान्तवर्धनीसभायां मीमांसाशास्त्रे परीक्षितः प्रथमपदे सम्भावितश्च । नन्दनवत्सरे (1892) महीशूरपुरे राजसभायां मीमांसातन्त्रे परीक्षितः अत्युत्तमकक्ष्यायां निवेशितः, सम्भावितश्च अनुत्तमेन सत्कारेण । नन्दनसंवत्सरीयमहीशूरपुरसंस्कृतमहाकलाशालावृत्तान्तपत्रिका कर्नाटकभाषायां एवं लिखति :—

"Over and above the Sambhavana in the shape of money Mr. VenkataSubrahmanya Sastrigal having scored record marks in Mimamsa, has become entitled to the honour of being presented with a pair of shawls in accordance with the usual practice"

प्राय: 1898 वत्सरे नवसालपुरीराजसभायां तस्मिन्नेव शास्त्रे परीक्ष्य विद्वद्भिः बह्वमन्यत शास्त्रिवर्यः। ततः काञ्चीकामकोटिपीठाधिपतिजगद्गुरूणां यतीन्द्राणां आस्थाने पण्डिताध्यक्षपदे नियमितोऽभूत्। 1906 वत्सरे शास्त्रिवर्यः वि.कृष्णस्वाम्यार्यवर्येण स्वविद्यालये धर्मशास्त्राध्यापकपदे नियुक्तः, 1907 वत्सरे मीमांसाध्यापकश्चाकारि। 1918 वत्सरे शास्त्रिवर्यः प्रधानाध्यापकपदे नियमितः तत्पदमाजन्मालमकरोत्। महीशूरपुरराजसभायां यदा परीक्षितोऽभूत् ततः प्रभृति यावदायुषं तस्यां सभायां परीक्षकश्चाभूत्। मद्रपुरविश्वविद्यापीठे शिरोमणिपरीक्षाविभागे 1916 वत्सरादारभ्य प्रतिवत्सरं परीक्षकोऽभूत्। एवं वारणसीविश्वविद्यापीठे नैकवर्षेषु परीक्षकः, कुम्भकोण-चिदम्बर-त्रिशिरःपुरादितसभासु परीक्षकश्चाभूत्। 1927 वत्सरे मद्रपुरीविश्वविद्यापीठे विद्वच्छिरोमणिपरीक्षकसमितावग्रिमासने नियमितः। 1913 वत्सरे इदानीं श्रीकाञ्चीकामकोटिपीठं अलङ्कुर्वाणाः श्रीजगद्गुरवः यतीन्द्राः "शास्त्ररत्नाकर" बिरुदेन शास्त्रिवर्यं अभूषयन्। 1923 वत्सरे वाराणसीस्थभारतधर्ममहामण्डलम् "मीमांसारत्नाख्यया तं सत्कारयति स्म। 1925 वत्सरे अस्मद्राजप्रतिनिधिः शास्त्रिवर्याय "महामहोपाध्याय" बिरुदं समार्पयत्। 1922 वत्सरे मद्रपुरे युवराजसमागममहोत्सवे शास्त्रिवर्यः ताटङ्क कटक (मेडल्-तोडा)प्रभृतिसत्कारेण सम्भावितोऽभूत्। 1924 वत्सरे षष्ट्यब्दपूर्तिमहोत्सवे अन्तेवासिनः स्वगुरुभक्तिप्रकटनमभिनन्दनपत्रं कञ्चन राजतकुसुमपिटकञ्च समुपाहरन्। एवमेव 1925 वत्सरे महामहोपाध्यायबिरुदसमर्पणसमये छात्राः अध्यपकाश्च स्वाभिन्दनप्रकटनक्षमं प्रशस्तिपत्रं राजतपूजापेटिकाञ्च समर्पयामासुः। तस्मिन्नेव समये जगद्गुरुश्रीयतीन्द्राः श्रीकामकोटिपीठाधिपतयः अस्मत्पण्डितरत्नं रत्नखचिताङ्गुलीयकेन अनुग्रहपुरस्सरमभूषयन्।*

* अत्र बहुत्र यथार्थविषयनिवेदनेन उपकृतवते निरन्तरपितृभक्तिभरिताय मत्प्रियसुहृदे वेङ्कटसुब्रह्मण्यशास्त्रिणः सूनवे ईश्वरशास्त्रिणे निरतिशयं कृतज्ञवादमाविष्करोमि।

श्रीः

श्रीशिवाय नमः

# भाट्टदीपिका

विश्वेश्वरं नमस्कृत्य खण्डदेवस्सतां मुदे ।
तनुते तत्प्रसादेन संक्षिप्तां भाट्टदीपिकाम् ।

## ॥ भाट्टचिन्तामणिः ॥

वन्दे डुण्ढि महालिङ्गं विश्वेशं मणिकर्णिकाम् ।
ईश्वरश्रीनिवासार्याहोबलाख्यगुरूत्तमान् ॥ १ ॥
श्रीमत्कवेरजातीरं विद्वद्वृन्दोपशोभितम् ।
अत्युत्तमशिवक्षेत्रविष्णवादिस्थानमस्ति हि ॥ २ ॥
श्रीशहराजेन्द्रपुरे श्रीशहराजेन्द्रविष्टपैः सद्देशे ।
कृतवासो विमलमतिर्होशनिकर्णाटकस्सुधीः श्रीमान् ॥ ३ ॥
चक्रे माहिषशतकं धाटीशतकं तथाऽऽशिषां शतकम् ।
श्लेषकविसार्वभौमः श्रीमान्वाञ्छेश्वरः स्वतन्त्रोऽसौ ॥ ४ ॥
तस्य नप्ता माधवार्यपौत्रः श्रीनरसिंहतः ।
वेदवेदाङ्गतत्त्वज्ञात्सर्वशिष्टाप्रपूजितात् ॥ ५ ॥
लब्धजन्माऽधीतशास्त्रो वेदार्थैकनिविष्टधीः ।
माहिषं शतकं येन प्रपितामहनिर्मितम् ॥ ६ ॥
व्याख्यातमतिगम्भीरं पितृप्रोक्तेन वर्त्मना ।
हिरण्यकेशिसूत्रं च व्याख्यातं कृत्स्नमेव हि ॥ ७ ॥

---

१ होसल इति पाठान्तरम् ।

दत्तचिन्तामणिं चैव श्राद्धचिन्तामणिं तथा ।
कृतवान्ब्रह्मसूत्रार्थचिन्तामणिमनुत्तमम् ॥ ८ ॥

काकताळीयवादार्थः कृतो येनाऽतिदुर्घटः ।
श्रीवाञ्छेश्वरनामाऽसौ तनुतेऽद्य यथामति ॥ ९ ॥

श्रीभाट्टदीपिकाव्याख्यां भाट्टचिन्तामणिं मुदा ।
दोषसत्त्वेऽपि कृपया गुणं गृह्णन्तु पण्डिताः ॥ १० ॥

प्रारिप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्त्यर्थमनुष्ठितमिष्टदेवतानमस्कारलक्षणं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नन् चिकीर्षितं प्रतिजानीते—**विश्वेश्वरमिति ॥** विश्वस्य प्रपञ्चस्य ईश्वरमन्तर्यामिरूपेण नियन्तारमित्यर्थः । 'सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः । सर्वव्यापी च भगवान् तस्मात्सर्वगतः शिवः ॥' इत्यादिस्मृतेरिति भावः । अथवा विश्वस्य विष्णोरीश्वरो विश्वेश्वरः । पूज्यपूजकभावः षष्ठ्यर्थः । ततश्च विश्वेन विष्णुना पूज्य इत्यर्थः । तथाच महाभारते पारिजातापहरणे श्रीकृष्णं प्रतीश्वरवचनम्, 'पुरा मैनाकमाश्रित्य तपस्त्वमकरोर्यदा । तदा मम वचः कृष्ण संस्मृत्य स्थैर्यमाप्नुहि ॥ अवध्यस्त्वमजय्यश्च मत्तश्शूरतरस्तथा । भवितासीत्यवोचं यत्तत्तथा न तदन्यथा ॥' इति । एवं स्कान्देऽपि वैकुण्ठचतुर्दश्यामर्धरात्रे ईश्वरेण विष्णुपूजा कृता, प्रभाते विष्णुना शिवपूजा कृतेत्युक्तत्वादप्ययमर्थः स्पष्टः । यद्वा विश्वं चासावीश्वरश्चेति विग्रहः । विश्वं जगद्विष्णुर्वा तदभिन्न ईश्वर इत्यर्थः । 'त्वमेवाहं जगच्चेदं सदेवासुरमानुषम्' इति विष्णुपुराणे ईश्वरं प्रति विष्णुवचनाद्विश्वाभेद ईश्वरस्य उपपन्न इति भावः । यद्यपि प्रथमव्याख्याने विश्वेश्वरपदेनैव स्वापेक्षयापि भगवतः उत्कर्षप्रतीतेर्नमस्कृत्येत्यस्य नातीव प्रयोजनं, तथापि कायिकादिनमस्कारप्रतीत्यर्थं तथोक्तमिति ध्येयम् । द्वितीयया कर्मत्वं बोध्यते । नच नमस्स्वस्तीत्यादिना चतुर्थी स्यादिति वाच्यम्; उपपदविभक्त्यपेक्षया कारकविभक्तेर्बलीयस्त्वेन द्वितीयया चतुर्थीबाधात् । कर्मत्वं च धात्वर्थतावच्छेदकफलशालित्वम् । धात्वर्थतावच्छेदकत्वं च विशेषणतया धातुप्रतिपाद्यत्वम् । स्वापकर्षावधित्वप्रकारकबोधविषयता निपातार्थः । प्रयोजकव्यापारो धात्वर्थः । भावना उत्तरकालीनत्वं च क्त्वाप्रत्ययार्थः । तथा च विश्वेश्वरकर्मकस्वापकर्षावधित्वप्रकारकबोधविषयताप्रयोजकव्यापारकरणकभावनोत्तरकालीनेति क्त्वान्तार्थः । ततश्च धात्वर्थतावच्छेदकतादृशविषयताश्रयत्वेन विश्वेश्वरस्य कर्मत्वात् द्वितीयोपपत्तिः । स्वयंभुवे नमस्कृत्येत्यादौ त्वपकर्षावधित्वमात्रविवक्षया चतुर्थी । न चावधित्वस्यापादानतारूपतया पञ्चमीप्रसङ्ग इति वाच्यम्; क्रियान्वय्यवधित्वस्यैवापादानतारूपत्वेन पञ्चमीप्रयोजकतया प्रकृते तदभावात् । केचित्तु नारायणं नमस्कृत्येत्यादौ धातोरेव लक्षणया नमस्कारानुकूलव्यापारोऽर्थः । नमःपदं तात्पर्य-

**इह खलु निखिलपुमर्थानर्थसाधनौ धर्माधर्मौ साङ्गोपाङ्गवेदाध्ययनसमधिगम्यौ**

ग्राहकम् । तेन सार्थकनमःपदयोगाभावान्न चतुर्थी । 'स्वयंभुवे नमस्कृत्य ब्रह्मणेऽमिततेजसे' इत्यादौ तु नमःपदस्य अर्थविवक्षया नमःपदयोगसत्त्वाच्चतुर्थ्येव न द्वितीयेत्याहुः । अन्ये तु स्वयंभुवे नमस्कृत्येत्यादौ स्वयंभुवं अनुकूलयितुं इत्यर्थविवक्षायां क्रियार्थोपपदस्येत्यादिना चतुर्थी । न च तर्हि नमःस्वस्तीत्यादिसूत्रे नमःपदवैयर्थ्यमिति वाच्यम् ; हरये नम इत्यादौ हरिमनुकूलयितुमित्यर्थाविवक्षायां संबन्धसामान्ये षष्ठीप्राप्तौ तदपवादतया तस्य सार्थक्यादित्याहुः । यत्तु नारायणं नमस्कृत्येत्यादौ नमःपदं नतिकर्मपरं, तथाच नारायणं नतिकर्मीकृत्येत्यर्थविवक्षया घटं शुक्लं करोति घटं शुक्लीकरोति इत्यादौ घटादेरिव नारायणादेः कृतिकर्मत्वात् द्वितीयानिर्वाह इति तन्न । नमःपदस्य धर्मिबोधकत्वेन हरिराविर्भवतीत्यादिवत् नमो भवतीति प्रयोगप्रसंगादिति दिक् । **तत्प्रसादेन**—विश्वेश्वरप्रसादेन । भक्ताभीष्टप्रदानेच्छया पूर्ववाक्येऽप्राधान्येन निर्दिष्टस्यापि विश्वेश्वरस्य पूर्वोपस्थितिमात्रेण सर्वनाम्ना ग्रहणम् । 'दशैते राजमातङ्गास्तस्यैवामी तुरंगमाः' इत्यादौ तथा दर्शनात् । **सताम्**—महताम् । **मुदे**—सन्तोषाय । भाट्टानां सिद्धान्तानां दीपिकेव प्रकाशिका भाट्टदीपिका नाम् । **खण्डदेवः**—खण्डदेवनामा । **तनुते**—विस्तारेण करोतीत्यर्थः । ननु बहुषु आकरग्रन्थेषु सत्सु किमनयेत्यत आह—**संक्षिप्तामिति** । शब्दसंक्षेपयुक्तामित्यर्थः । ततश्च तेषां अतिविस्तृतत्वेन दुर्बोधत्वाल्लघूपायेन भट्टमतप्रक्रियाज्ञापनार्थमेतत्प्रबन्धारम्भ इति भावः । **निखिलेति** । निखिलाः सकलाः ये पुमर्थाः पुरुषार्थाः धर्मार्थकाममोक्षाः, अनर्थाः नरकादयः तेषां साधने इत्यर्थः । "धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते । ज्ञानं कर्म च संयुक्तं मुक्त्यर्थं कल्पितं तथा ॥" इति वचनादुत्तरोत्तरधर्मानुष्ठानं प्रति पूर्वपूर्वजन्मार्जितस्य धर्मस्य हेतुत्वात् । 'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥' इत्यादिवचनाच्चेति भावः । तथा श्रुतावप्यर्थो धर्मसाध्य इति स्पष्टं प्रतीयते । 'ऋद्धिकामाः सत्रमासीरन्' 'यं कामयेत वसीयान् स्यात्' इत्यादिवचनैः । तथा कामोऽपि पुत्रादिः वृष्ट्यादिश्च । 'पुत्रकामः पुत्रेष्ट्या यजेत' 'वृष्टिकामः कारीर्या यजेत' 'चित्रया यजेत पशुकामः' इत्यादिवचनैः । तथा मोक्षोऽपि 'ब्रह्मसायुज्यकामो विश्वसृजामयनेन यजेत' इत्यादिवचनैः । यद्यपि 'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादिश्रुतिभिः ज्ञानैकसाध्यो मोक्षः ; तथापि विविदिषावाक्येन सर्वकर्मणां ज्ञानोत्पत्तौ विनियोगात् ज्ञानोत्पत्तिद्वारा मोक्षप्रयोजकत्वसत्त्वान्नानुपपत्तिः । 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इत्युत्तरमीमांसाधिकरणन्यायादिति भावः । **साङ्गेति** । चत्वारो वेदाः प्रधानानि । 'शिक्षा व्याकरणं छन्दो निरुक्तं ज्योतिषं तथा । कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः ॥' इति वचनोक्तानि षडङ्गानि । 'स्मृतयश्च पुराणानि मीमांसा न्याय एव च' इति चत्वार्युपाङ्गा-

**तच्च विचारमन्तरेण न भाव्यायालमिति तत्प्रदर्शनाय परमकारुणिको भगवान् जैमिनिराचार्यः सकलविद्योपकारिधर्ममीमांसां 'अथातो धर्मजिज्ञासा' इत्यारभ्य 'विद्यते वाऽन्यकालत्वात् यथा याज्यासम्प्रैषः' इत्यन्तैस्सूत्रैः बह्वधिकरणगर्भितां षोडशलक्षणीं अभ्यर्हितां विद्यां प्रकटीचकार। अधिकरणं तु वेदवत् षडङ्गम्। यदाहुः—**

---

नीति चतुर्दशसंख्याकानि द्रष्टव्यानि। **वेदाध्ययनैकसमधिगम्याविति**— अधीतवेदैकसमधिगम्यावित्यर्थः। धर्माधर्मयोरतीन्द्रियतया चक्षुरादिलौकिकप्रमाणाप्रवृत्तेरिति भावः। **तच्च**—गुरूच्चारणानूच्चारणरूपमध्ययनं च। **विचारं**—मीमांसाशास्त्रसिद्धान्तज्ञानम्। **अन्तरेण**—विना। **न भाव्यायालं**—भाव्यं भावयितुं नालमसमर्थम्। धर्माधर्मरूपवेदार्थज्ञानजननासमर्थमिति यावत्। तत्प्रदर्शनाय प्रकटीचकारेत्यग्रेणान्वयः। वेदार्थज्ञानोत्पत्तिद्वारा धर्माधर्मज्ञानमुत्पद्यत इत्यभिप्रायेणेदम्। "चतुर्दशानां विद्यानां धारणं हि यथार्थतः। विज्ञानमिति तद्विद्धि तेन धर्मो विवर्धते" इति कूर्मवचनादयमर्थः स्पष्टं प्रतीयत इति भावः॥ **सकलेति**। सकलमखण्डं परिपूर्णं ब्रह्मेत्यर्थः। तस्य विद्या ब्रह्मज्ञानम्। **तदुपकारिधर्ममीमांसाम्**—तदुपजीव्यधर्ममीमांसामित्यर्थः। उत्तरमीमांसासूत्रेषु "औपसदवत्तदुक्तम्। प्रदानवदेव तदुक्तं" इत्यादिषु पूर्वतन्त्रोपजीवकतायाः स्पष्टत्वादिति भावः। एवं सकलविद्योपकारीत्यनेन साङ्ख्ययोगन्यायालङ्कारगान्धर्वधर्मशास्त्रादिसर्वशास्त्राणां वेदार्थविचाररूपमीमांसाशास्त्रमूलकत्वमपि ध्वनितम्। तथाहि—"अजामेकां लोहितशुक्लकृष्णाम्" इति प्रतिपादितप्रकृतिपुरुषविवेकस्य साङ्ख्यशास्त्रसिद्धतया वेदार्थविचारेण साङ्ख्यशास्त्रज्ञानसम्भवात्। तथा "शतं चैका च हृदयस्य नाड्यः।", "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति उक्तयोगस्य वेदार्थविचाररूपत्वात्। एवं षोडशपदार्थानां न्यायशास्त्रसिद्धानां प्रमाणप्रमेयेत्यादिसूत्रोक्तानां वेदार्थविचारेण प्रतीतिः स्फुटा। तत्र स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयमित्युक्त्या प्रमाणानां प्रतीतिः। स्मृतिः—अतिदेशवाक्यार्थस्मृतिः। तेनोपमानप्रमाणमुक्तं भवति। प्रत्यक्षं—प्रसिद्धम्। ऐतिह्यं—शब्दः। अनुमानः—अनुमानमित्यर्थः। लिङ्गव्यत्ययः छान्दसः। तथा च दशविधप्रमेयानामपि आत्मशरीरेन्द्रियादीनां 'आत्मानं रथिनं विद्धि शरीरं रथमेव च' इत्यादौ प्रतीतिः स्फुटा। एवं संशयादीनामपि 'होतव्यमग्निहोत्रं न होतव्यं' इत्यादिश्रुत्या प्रसिद्धिर्द्रष्टव्येत्यस्मत्कृततर्कसंग्रहव्याख्याने विस्तरः। एवमलङ्कारशास्त्रप्रतिपाद्यनवरसानां 'रसो वै सः, रसं ह्येवायं लब्ध्वानन्दीभवति' इत्यादिश्रुतिभिः, 'योषा जारमिव प्रियम्' इत्यादिभिश्चालङ्काराणां प्रतिपादनाद्वेदार्थज्ञानमूलकत्वं स्पष्टम्। एवं गान्धर्वशास्त्रप्रसिद्धषड्जादिस्वराणां "षड्जं मयूरो वदति" इत्यादिशिक्षोक्तरीत्या सामवेदार्थज्ञानपूर्वकत्वं प्रतीयते। एवमन्येषामपि धर्मशास्त्रप्रभृतीनां वेदमूलकत्वं द्रष्टव्यमिति संक्षेपः। **अभ्यर्हितामिति**। यद्यपि 'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इत्यभि-

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ।
प्रयोजनं सङ्गतिश्च प्राञ्चोऽधिकरणं विदुः ॥ इति ॥

सङ्गतिस्तु प्रसङ्गादिभेदात् बहुविधा । तत्रेदमाद्यमधिकरणम्—

(१)—अथातो धर्मजिज्ञासा ॥ १ ॥

अत्र 'स्वाध्यायोऽध्येतव्यः' * इत्यध्ययनविधिवाक्यं विषयः । वेदाध्ययनानन्तरं वेदार्थविचारः कर्तव्यो वा न वेति सन्देहः ।

---

युक्तोक्त्या न्यायस्यापि सर्वशास्त्रोपकारकत्वं प्रतीयते ; तथापि 'सात्त्विकं तत्र वेदान्तं मीमांसा राजसं स्मृतम् । तामसं न्यायशास्त्रं तु हेतुवादाभियन्त्रितम् ॥ यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् । तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ ॥' इति वचनादभ्यर्हितत्वमित्याशयः । **विषय इत्यादि** । विषयत्वं सिद्धान्तितार्थतात्पर्यकत्वं विषयवाक्यानां बोध्यम् । विशयः--संशयः। पूर्वपक्षः--सिद्धान्तानिरसनीयः प्रथमोपपादनीयः पक्षः। उत्तरं---सिद्धान्तः । प्रयोजनम्—अनुष्ठानभेदः । पञ्चाङ्गमिति प्रामादिकः पाठः । प्रयोजनं सङ्गतिश्च प्राञ्चोऽधिकरणमित्येव पाठः । तेन न षडङ्गमिति पूर्वग्रन्थविरोधः । **प्रसङ्गादीति** । आदिना आक्षेपादिसङ्ग्रहः। पूर्वसिद्धान्ताक्षेपेणोत्तरप्रवृत्तावाक्षेपिकी संगतिः । पूर्वन्यायपरित्यागे प्रत्युदाहरणसंगतिः । उपस्थितस्य उपेक्षानर्हत्वं प्रसंगसंगतिः । उपस्थितविषयनिष्ठोपेक्षानर्हतावच्छेदकधर्मवत्त्वं प्रसङ्ग इति यावत् । अधिकाशङ्कानिराकरणार्थं पूर्वन्यायातिदेशः आतिदेशिकी संगतिः । पूर्वसिद्धान्तं पूर्वपक्षीकृत्य यत्रोत्तरसिद्धान्तप्रवृत्तिः तत्रापवादिकी सङ्गतिः । प्रकृतसिद्ध्यर्थचिन्ता उपोद्घातसङ्गतिः। प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तावक्श्यवक्तव्यत्वमवसरः। पूर्वसिद्धान्तमुपजीव्योत्तरप्रवृत्तावुपजीव्योपजीवकभावसङ्गतिरिति पूर्वाचार्योक्तरीत्येत्यर्थः । एवमेककार्यकारित्वादयोऽपि तन्त्रान्तरप्रसिद्धा द्रष्टव्याः । उक्तसङ्गतयोऽनन्तरसंगतिभेदाः । सामान्यसंगतित्रयं सर्वत्रापेक्षितम् । तद्यथा---शास्त्रसंगतिः, अध्यायसंगतिः, पादसंगतिश्चेति । धर्मविचाररूपत्वे शास्त्रसंगतिः । अध्यायार्थनिरूपणरूपत्वेऽध्यायसंगतिः । पादार्थविचाररूपत्वे पादसंगतिरित्यग्रे व्यक्तम् । **तत्र**---वक्ष्यमाणशास्त्रे । घटकत्वं सप्तम्यर्थः । **आद्यमधिकरणमिति**---प्रथमविचार इत्यर्थः । **अथातो धर्मजिज्ञासा** । **अत्र**---अधिकरणे । **अध्ययनविधिवाक्यमिति**--स्वाध्यायोद्देशेनाध्ययनविधायकं वाक्यमित्यर्थः । विषयमुक्त्वा विशयं दर्शयति---**वेदाध्ययनानन्तरमिति** ॥ वेदार्थविचारः कर्तव्यो न वेति सन्देहोक्तेरेककोटिक एव सर्वत्राधिकरणार्थसंशय इति न भ्रमितव्यम्। बहुकोटिकानामपि संशयानां पूर्वोत्तरमीमांसयोर्दृश्यमानत्वादिति द्रष्टव्यम् । वेदाध्ययनानन्तरमित्यनेन सूत्रस्थाथशब्दार्थस्सूचितः । कर्तव्यो

---

* तैत्तिरीयारण्यकम् २. १५.

तत्र पूर्वः पक्षः 'अधीत्य स्नायात्' इति स्मृत्याऽध्ययनानन्तरमेव गुरुकुला-त्परावर्तनविधानविरोधात् न कर्तव्यः। न चाध्ययनविधित एव अर्थज्ञानभाव्यकत्वा-वगमात् तत्सिद्धिः। अर्थज्ञानजनकत्वेन अध्ययनस्य लोकसिद्धत्वेन अविधेयत्वात्। तन्नियमस्य च अर्थज्ञाने अनुपयोगात्, अव्यभिचरितक्रतुसम्बन्धाभावेन क्रतुं याव-दुपयोगकल्पनानुपपत्तेश्च न विधेयत्वम्। अतः स्वर्गाद्यर्थमेव अध्ययनं विधीयते। लोकतः पूर्वं प्रवृत्त्यङ्गीकारेण यथाश्रुतार्थज्ञानार्थं वा। अध्ययनमेव वा भावनाभाव्यमस्तु।

---

न वेति सन्देहकरणात् जिज्ञासापदेन वाक्यलक्षणया विचारो लक्ष्यत इति सूचितम्॥ **पूर्वः पक्ष इति**॥ क्रियत इति शेषः। तमेवोपपादयति—**अधीत्येति**॥ नन्व-धीत्य स्नायादित्यनेन विधीयमानं स्नानं वार्तिकरीत्या ब्रह्मचर्यनियमसमाप्तिर्वा, धर्मसूत्रोक्तरी-त्या माणवकसंस्कारकर्मविशेषो वा, कर्कभाष्योक्तरीत्या गृहस्थाश्रमप्रतिपत्तिर्वा। सर्वथा तद्वि-चारेण विरुध्यत इत्यत आह—**गुरुकुलादिति**॥ तथाच स्नानशब्देन समावर्तनमेवोच्यते। तच्च गुरुकुलान्मा समावर्तिष्टेति ब्रह्मचारिधर्मविधानेन गुरुकुलापादानकपरावर्तनरूपमिति गुरुसापेक्षविचारविरोधीति भावः। ननु स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिनाऽधीतेन स्वाध्या-येन फलवदर्थज्ञानं सम्पादयेदित्यर्थपर्यवसितेन विचारस्यावश्यकत्वमिति शङ्कते—**नचेति**॥ न चाधीत्य स्नायादिति स्मृतिविरोध इति वाच्यं; प्रत्यक्षस्वाध्यायविधिविरोधेन स्मृतेः सर्व-वेष्टनस्मृतिन्यायेन अप्रमाणत्वादिति भावः। **लोकसिद्धत्वेनेति**॥ अर्थवच्छब्दज्ञानमात्रस्य लोके स्वार्थशाब्दबोधं प्रति कारणतायाः क्लृप्तत्वेन तदंशे लोकप्राप्तानुवादमात्रत्वेन स्मृतिबा-धकत्वासंभवात्; अप्राप्ते शास्त्रमर्थवदिति न्यायादिति भावः। ननु वेदसमानार्थकलौकिकवाक्य-स्यार्थज्ञाने पक्षप्राप्तत्वेन तन्निरासफलकत्वान्न विध्यानर्थक्यमित्यत आह—**तन्नियमस्य चेति**॥ वेदेनैवार्थज्ञानं संपादयेदिति नियमस्येत्यर्थः। **अनुपयोगादिति**॥ वेदवाक्यश्रव-णेन लौकिकवाक्यश्रवणेन वा अर्थज्ञाने जायमाने नियमस्य प्रयोजनाभावादित्यर्थः। नन्वनारभ्याधीतत्वेनाध्ययनविधेः प्रकरणेन क्रतूपस्थित्यभावेऽपि पर्णतान्यायेन क्रतू-पस्थित्या क्रतूपयोगोऽस्त्वित्यत आह—**अव्यभिचरितेति**॥ जुह्वादीनां क्रत्वैकान्त्यात् युक्तं पर्णतादीनां क्रत्वर्थत्वम्। अर्थज्ञानं तु अध्यापनद्वारा द्रव्यार्जनसाधनत्वेनापि दृष्टमिति क्रत्वैका-न्त्याभावान्न क्रत्वपूर्वोपयोगीति भावः। नन्वर्थज्ञानजनकत्वस्य लोकसिद्धत्वेऽपि तन्नियमस्या-दृष्टार्थत्वमस्तु दृष्टार्थभोजनाश्रितप्राङ्मुखत्वादिनियमवदित्यत आह—**अत इति**॥ आर्थि-कनियमस्यादृष्टार्थत्वकल्पनापेक्षया श्रुताध्ययनस्यैवादृष्टार्थत्वस्योचितत्वात्स्वर्गाद्यर्थमेवाध्ययनं वि-धीयत इति युक्तं विश्वजिन्न्यायादिति भावः। ननु स्वर्गकामपदाध्याहारापत्तेर्न स्वर्गार्थत्वं युक्तम्। किंच दृष्टे संभवत्यदृष्टकल्पनासम्भवादपि न स्वर्गार्थत्वसम्भव इत्यत आह—**यथाश्रु-तार्थज्ञानार्थमिति**॥ अध्ययनं विधीयत इति पूर्वेणान्वयः। लोकतः पूर्वं वेदप्रवृत्तेरिति तत्र

न चैवमिष्टभाव्यकत्वाभावात् प्रवृत्त्यनुपपत्तिः । 'अनधीयाना व्रात्या भवन्ति' इति वचनेन अकरणे प्रत्यवायबोधनेनापि प्रवृत्तिसिद्धेः । तस्मान्नार्थविचारार्थं गुरुकुलेऽवस्थानमिति ॥

सिद्धान्तस्तु– न स्वाध्यायविधिः स्वर्गाद्यर्थमध्ययनं विधत्ते । दृष्टे सम्भवत्यदृष्टस्यान्याय्यत्वात् । नापि यथाश्रुतार्थज्ञानार्थम् । तथात्वे व्रात्यताबोधकवाक्येन अध्ययनस्यावश्यकत्वात् गृहीतपदपदार्थसङ्गतिकस्य

'स्थाणुरयं भारहारः किलाभूत्
अधीत्य वेदं न विजानाति योऽर्थम्'

इत्यादिवचनाच्च ज्ञानस्याप्यावश्यकत्वेन यथाश्रुतार्थज्ञानस्य आनुषङ्गिकतयाऽपि सिद्धेः स्वाध्यायविधिवैयर्थ्यप्रसङ्गात् । एतेन–अध्ययनभाव्यकत्वपक्षोऽपि निरस्तः । अतो वैयर्थ्यपरिहारार्थं प्रयोजनवदर्थज्ञानाद्युद्देशेन स्वाध्यायाध्ययनं तव्यप्रत्ययेन

---

हेतुः । अर्थज्ञानस्य कल्पितविधिगम्यत्वेन तदपेक्षयापि लाघवादाह–**अध्ययनमेव वेति** ॥ स्वाध्याय इति प्रथमया करणत्वं लक्षयित्वा सक्तुन्यायेन स्वाध्यायेनाध्ययनं भावयेदिति वाक्यार्थाङ्गीकारान्न विध्यन्तरकल्पनमिति लाघवमित्यर्थः । व्रात्यताबोधकवाक्येनाध्ययनस्य प्राप्तत्वान्न भावार्थाधिकरणन्यायेन विधेयत्वमिति भावः । नन्वेवमध्ययनस्य सुखदुःखनिवृत्त्यन्यतररूपत्वाभावेन पुरुषार्थरूपत्वाभावात्कस्यापि स्वाध्यायाध्ययने प्रवृत्तिर्न स्यादिति शङ्कते–**न चैवमिति** ॥ अनधीयाना इति अकरणे प्रत्यवायश्रवणेनैव प्रवृत्त्युपपत्तेर्नाध्ययने इष्टत्वज्ञानापेक्षेत्यर्थः । 'योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥' इति वचनाच्चेति भावः । पूर्वपक्षमुपसंहरति–**तस्मादिति** ॥ ततश्चार्थविचारस्यानावश्यकतया तदर्थं गुरुकुलावस्थानाप्रसक्तेर्वेदग्रहणानन्तरमेव समावर्तनमिति पूर्वपक्ष इत्यर्थः । तथा च वेदार्थस्य विचार्यत्वाभावाच्छास्त्रमनारम्भणीयमिति भावः ॥ **स्थाणुरिति** ॥ ज्ञानशून्य इत्यर्थः । 'यथा पशुर्भारवाही न तस्य लभते फलम्' 'यथा खरश्चन्दनभारवाही भारस्य वेत्ता नतु चन्दनस्य' इत्युपबृंहणात् । आदिपदेन, "वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चापि यत् । अजानतोऽर्थं तत्सर्वं तुषाणां खण्डनं यथा ॥ पाठमात्ररतान्नित्यं द्विजातींश्चार्थवर्जितान् । पशूनिव च तान् प्राज्ञो वाङ्मात्रेणापि नार्चयेत् ॥" इत्यादिपरिग्रहः॥ **वैयर्थ्यप्रसङ्गादिति** ॥ स्वाध्यायग्रहणस्य यथाश्रुतार्थज्ञानस्य च प्रकारान्तरेणावश्यकर्तव्यत्वेन स्वाध्यायविधेस्तत्रोपयोगाभावादित्यर्थः । **एतेन**–स्वाध्यायाध्ययनार्थज्ञानयोः प्रकारान्तरेण सिद्धत्वेन । **प्रयोजनेति** ॥ क्वचिद्यथाश्रुतार्थज्ञानं, क्वचिल्लक्षणाध्याहारविपरिणामव्यवधारणादिलभ्यार्थज्ञानादि, साम्नामृगक्षराभिव्यक्तिः, स्तोभानां गीतिकालपरिपूरणं, मन्त्रब्राह्मणक्रमस्यानुष्ठा-

**लक्षणया विधीयते । प्रयोजनवदर्थज्ञानादिसाधनीभूतस्वाध्यायोद्देशेन वाऽध्ययनमा-**

नक्रमः, विधिगतदेवतावाचिपदस्य त्यागवाक्यघटकत्वनियम इत्यादिप्रयोजनम् । तदुक्तं न्यायरत्नमालायाम्, 'न केवलार्थविज्ञानसिद्धिरस्य प्रयोजनम् । दृष्टं यच्छक्यते कर्तुं तत्सर्वं फलमिष्यते ॥' इति । न चैवमुद्देश्यानेकत्वाद्वाक्यभेद इति वाच्यम् । उद्देश्यानामश्रुतत्वेन सर्वानुगमकधर्मप्रवृत्तिनिमित्तकस्यैव पदस्याध्याहर्तव्यतया एकपदेनोद्देशेन सर्वेभ्यः कामेभ्य इतिवदवाक्यभेदादिति भावः । **स्वाध्यायाध्ययनं**---स्वशाखाप्रापकोच्चारणकरणकभावना । **विधीयते**---तव्यप्रत्ययार्थैकदेशप्रवर्तनाविषयीक्रियते । "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" इति स्मृत्या तव्यप्रत्ययस्य कृत्यप्रत्ययत्वेन प्रैषे शक्तावपि प्राप्तार्थविषयकप्रवर्तनारूपप्रैषस्य प्रकृते अप्राप्तार्थे बाधात् प्रवर्तनाविषयप्रवृत्तिलक्षणया निर्वाह इत्याह---**लक्षणयेति** ॥ उक्तं चाचार्यैः 'प्रवर्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते । अप्राप्ते प्रेषणं सर्वं विधित्वं प्रतिपद्यते ॥' इति । उपपदार्थस्य स्वाध्यायस्य तु न भावनाकर्मत्वम् । अपितु धात्वर्थेन भावनाभाव्ये जननीये द्वारत्वेनापेक्षिततया धात्वर्थीयप्राप्यकर्मत्वम् । अत एव सक्तुन्यायेन धात्वर्थ एव गुणत्वेनान्वयः। "पार्वणौ होमौ जुहोति" इत्यत्र पर्वपदोक्तयागानां होमसंस्कार्यत्वेऽपि देवतात्वेन गुणत्वस्यापि सत्त्वेन पर्वदेवत्यहोमाभ्यामिष्टं भावयेदितिवत्स्वाध्यायवदध्ययनेन वेदसाध्यदृष्टफलजातं भावयेदिति वचनव्यक्त्याऽध्ययनस्य गुणकर्मत्वमुपादेयगतत्वात्स्वाध्यायैकत्वविवक्षापि वक्ष्यमाणोपपद्यत इति तान्त्रिकानुमतः पन्थाः । नन्वध्ययनस्यार्थज्ञानभाव्यकत्वे वाजपेयवाक्य इव विरुद्धत्रिकद्वयापत्तिः । अतः स्वाध्यायपदस्य वाजपेयन्यायेन नामधेयत्वं स्यात् । मध्यान्नीचादुच्चेत्यादिवाक्ये दकारनकारयोः इषे त्वोर्जे त्वेत्यादौ प्रथमत्वोपपदस्थानुदात्तस्वरस्य संहिताकाल एव लब्धस्वरूपाणामन्येपामप्येवंजातीयकानां बहूनां अर्थज्ञाने उपयोगाभावेनादृष्टार्थतया वैरूप्यं स्यात्; अतस्तत्परिहाराय धातोः पदाध्ययनमात्रपरत्वापत्त्या संहिताध्ययनोच्छेदापत्तिश्च इत्यत आह---**प्रयोजनवदिति** ॥ **स्वाध्यायोद्देशेनेति** ॥ अयमर्थः । अध्ययनेन स्वाध्यायं भावयेदित्येव प्रकृतविधेरर्थः । अर्थज्ञानार्थत्वं तु स्वाध्यायस्य वचनान्तरात् भवति । "षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति महाभाष्ये विध्यन्तरदर्शनात्, स्थाणुरयमित्यादिश्रुतेश्च । अत एव स्वाध्यायस्यार्थज्ञानार्थता तु लिङ्गकल्प्यश्रुतित एव भविष्यतीति केषांचित् उक्तिरनादरणीया क्लृप्तश्रुतेरेव सत्त्वात् । जपपारायणादिषु विनियोजकप्रत्यक्षविधिभिरेव विनियोगाकाङ्क्षाशान्त्या श्रुतिकल्पनानवकाशाच्च । अत एव "पुरोहितं वृणीत" इत्यत्र वृतेन पुरोहितेनेष्टं भावयेदितिवदधीतेन स्वाध्यायेनेत्यर्थवर्णनं संगतमपि विशेषणविधिकल्पकं सत् विधिद्वयपर्यवसाय्येवेति द्रष्टव्यम् । एवं च प्रकृतविधौ स्वाध्यायावाप्तेरेवोद्देश्यत्वान्न नामधेयत्वादिप्रसक्तिः। एवं अर्थज्ञानस्य कर्मसु विनियोजकवचनान्तरमपि दृश्यते । "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति श्रवणात् । ततश्च स्वर्गादिजनककर्मोपयुक्तार्थज्ञानादिसाधनत्वस्य

त्रम् । तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वाभिधानात् । अतश्च गुरूपसदनाध्ययना-

स्वाध्याये विशकलितैस्तैस्तैर्विधिभिरेव बोधनान्न कस्यापि विधेरपुरुषार्थभाव्यकत्वप्रसक्तिः । मूलेऽप्येतत्सूचनायैव प्रयोजनवदित्यादिविशेषणम् । एतेन स्वाध्यायपदस्य लक्षणामाश्रित्यार्थ-ज्ञानादीनां भाव्यतावच्छेदकादिकोटौ निवेशबोधनायैव तद्विशेषणमिति प्रत्युक्तम् । विधेः पुरुषार्थतदनुबन्ध्यन्यतरभाव्यकप्रवृत्तिविषयकत्वस्यैव नियतत्वात्तस्य स्वरूपसत एवोपयोगेन विधिवाक्यजन्यशाब्दबोधे तदन्यतरत्वस्य भाव्यतावच्छेदकतया विषयत्वनियमे प्रमाणाभावा-द्विधिस्वभावादेव तदाक्षेपादयोग्यतानिश्चयाभावेन शाब्दबोधे जाते अन्यलभ्यतत्प्रतीतये भाव्यवाचकपदे लक्षणाया अनुचितत्वाच्च । अनारभ्याधीतत्वेन प्रकरणाभावादव्यभिचरित-क्रतुसंबन्धाभावेन तत्प्रणाल्येतःपूर्वमनुपस्थितत्वाच्च । अत एव व्रीहीन् प्रोक्षतीत्यादौ इतः पूर्वमेव प्रकरणादिना तण्डुलनिष्पत्तिद्वारकापूर्वसाधनत्वस्योपस्थितत्वात् व्रीहिपदे लक्षणा । प्रत्युत क्रतूपकारार्थज्ञानजनकत्वस्य लक्षणया बोधे त्रयीसाध्यकर्मनिर्वाहाय वेदत्रयगतैकैकशाखाज्ञान-स्यावश्यकतया प्रोक्षणादिसंस्कार्यताया यवसाधारण्यवदध्ययनप्राप्यतायाश्शाखान्तरसाधारण्या-पत्तिः । स्वशाखात्वविवक्षायां युगपद्वृत्तिद्वयविरोधापत्तिः । अतः स्वाध्यायत्वमात्रं भाव्यतावच्छे-दकमित्येव युक्तमिति दिक् ॥ **अध्ययनमात्रमिति** ॥ मात्रपदेन स्वाध्यायस्योपादेयकोटौ निवे-शव्यावृत्तिः । नन्वेवं तद्गतैकत्वविवक्षा न स्यादित्यत आह—**तव्येति** ॥ आख्यातजन्य-प्रतीतिविशेष्यव्यापाराश्रयपरिच्छेदद्वाराऽऽख्यातार्थसंख्यान्वयनियमात् कर्मार्थकतव्यप्रत्ययोक्तसं-ख्यायास्तदभिहितभावनाघटकप्रयोजकव्यापारोपसर्जनकप्रयोज्यव्यापारस्यैव विशेष्यत्वेन तदाश्र-यकर्मपरिच्छेदकत्वेन भावनान्वयाद्विवक्षोपपत्तिः। अत एव 'स्वर्गकामो यजेत' इति कर्त्रर्थकलकारे भावनाघटकप्रयोज्यव्यापारोपसर्जनकप्रयोजकव्यापारस्यैव विशेष्यतया भानात् तदाश्रयकर्तृ-परिच्छेदकत्वेन लकारोपात्तसंख्यायाः भावनान्वयादेकत्वविवक्षा । तेन स्वर्गकामपदेनाभि-धानकाल इव स्वाध्यायपदेनाभिधानवेलायां उद्देश्यविशेषणतया भानं एकत्वस्याऽप्रयोजकमेव । ननु स्वर्गकामविशेषणपुंस्त्वस्येव अध्ययनविशेषणस्वत्वस्याप्यविवक्षापत्तिरिति चेन्न ; स्वेति पदान्तरोपात्तात्मीयत्वस्य समासेन परस्परान्वयात् ; अश्वाभिधान्यामश्वीयत्वस्येव वैयर्थ्यपरिहा-राय विवक्षितत्वात् । ननु तद्विवक्षयैवेष्टसिद्धेरेकत्वविवक्षायाः प्रयोजनं नास्तीति चेन्न; ये कुलपरम्परयैव द्विवेदिनस्त्रिवेदिनो वा तेषामप्येकशाखाध्ययनं नित्यं, अन्यदभ्युदयार्थमैच्छिक-मिति द्योतनार्थत्वेन सार्थक्यात् । तेन वेदानधीत्य वेदौ वा वेदं वापि यथाक्रममिति स्मृते-रियमेव श्रुतिर्मूलमिति द्रष्टव्यम् ॥ **गुरूपसदनेति** ॥ 'अष्टवर्षं ब्राह्मणमुपनयीत' इति विधौ आचा-र्यकरणस्यात्मनेपदेन बोधनादष्टवर्षो ब्राह्मणो गुरुमुपगच्छेदित्यर्थः । तद्विज्ञानार्थं गुरुमभिग-च्छेदितिवत् प्रायेण बालानां प्रवृत्तेः अयमेवाध्ययनविधिः । स चाविशेषाच्चतुर्दशविद्यापर एव । 'स्वाध्यायोऽध्येतव्य' इत्यस्य त्वर्थवादवैचित्र्यार्थं पुनःपुनराम्नानादनन्यपरत्वाभावेनाभ्यासा-

